॥ श्रीविष्णुस्तुती कण्डुमुनिप्रोक्त ब्रह्मपुराणे ॥

कण्डुरुवाच
नारायण हरे कृष्ण श्रीवत्साङ्क जगत्पते ।
जगद्बीज जगद्धाम जगत्साक्षिन्नमोऽस्तु ते ॥ १७८.१२९॥

अव्यक्त जिष्णो प्रभव प्रधानपुरुषोत्तम ।
पुण्डरीकाक्ष गोविन्द लोकनाथ नमोऽस्तु ते ॥ १७८.१३०॥

हिरण्यगर्भ श्रीनाथ पद्मनाभ सनातन । var shrIdhAma
भूगर्भ ध्रुव ईशान हृषीकेश नमोऽस्तु ते ॥ १७८.१३१॥

अनाद्यन्तामृताजेय जय त्वं जयतां वर ।
अजिताखण्ड श्रीकृष्ण श्रीनिवास नमोऽस्तु ते ॥ १७८.१३२॥ var खण्डल कृष्ण
pAThabehda
योगात्मन्नंप्रमेयात्मँल्लोकात्मंस्त्वं सनातनः ।
कूटस्थाचलदुर्ज्ञेय कुशेशाय नमोऽस्तु ते ॥ ६९.१३२॥

वरेण्य वरदानन्त ब्रह्मयोने गुणाकर ।
प्रलयोत्पत्तियोगेश वासुदेव नमोऽस्तुते ते ॥ ६९.१३३॥

पर्जन्यधर्मकर्ता च दुष्पार दुरधिष्ठित ।
दुःखार्तिनाशन हरे जलशायिन्नमोऽस्तु ते ॥ १७८.१३३॥

भूतपाव्यक्त भूतेश भूततत्त्वैरनाकुल ।
भूताधिवास भूतात्मन्भूतगर्भ नमोऽस्तु ते ॥ १७८.१३४॥

यज्ञ यज्वन्यज्ञधर यज्ञधाताऽभयप्रद ।
यज्ञगर्भ हिरण्याङ्ग पृश्निगर्भ नमोऽस्तु ते ॥ १७८.१३५॥

क्षेत्रज्ञ क्षेत्रभृत्क्षेत्री क्षेत्रहा क्षेत्रकृद्वशी ।
क्षेत्रात्मन्क्षेत्ररहित क्षेत्रस्रष्ट्रे नमोऽस्तु ते ॥ १७८.१३६॥

गुणालय गुणावास गुणाश्रय गुणावह ।
गुणभोक्तृ गुणाराम गुणत्यागिन्नमोऽस्तु ते ॥ १७८.१३७॥

त्वं विष्णुस्त्वं हरिश्चक्री त्वं जिष्णुस्त्वं जनार्दनः ।
त्वं भूतस्त्वं वषट्कारस्त्वं भव्यस्त्वं भवत्प्रभुः ॥ १७८.१३८॥

त्वं भूतकृत्त्वमव्यक्तस्त्वं भवो भूतभृद्भवान् ।
त्वं भूतभावनो देवस्त्वामाहुरजमीश्वरम् ॥ १७८.१३९॥

त्वमनन्तः कृतज्ञस्त्वं प्रकृतिस्त्वं वृषाकपिः ।
त्वं रुद्रस्त्वं दुराधर्षस्त्वममोघस्त्वमीश्वरः ॥ १७८.१४०॥

त्वं विश्वकर्मा जिष्णुस्त्वं त्वं शंभुस्त्वं वृषाकृतिः ।
त्वं शंकरस्त्वमुशना त्वं सत्यं त्वं तपो जनः ॥ १७८.१४१॥

त्वमादित्यस्त्वमोंकारस्त्वं प्राणस्त्वं तमिस्रहा ।
त्वं पर्जन्यस्त्वं प्रथितस्त्वं त्वं ज्येष्ठस्त्वं परायणः ॥ १७८.१४२॥

त्वमादित्यस्त्वमोंकारस्त्वं प्राणस्त्वं तमिस्रहा ।
त्वं पर्जन्यस्त्वं प्रथितस्त्वं वेधास्त्वं सुरेश्वरः ॥ १७८.१४३॥

त्वमृग्यजुः सामचैव त्वमात्मा संमतो भवान् ।
त्वमग्निस्त्वं च पवनस्त्वमापो वसुधा भवान् ॥ १७८.१४४॥

त्वं स्रष्टा त्वं तथा भोक्ता होता त्वं च हविः क्रतुः ।
त्वं प्रभुस्त्वं विभुः श्रेष्ठस्त्वं लोकपतिरच्युतः ॥ १७८.१४५॥

त्वं सर्वदर्शनः श्रीमांस्त्वं सर्वदमनोऽरिहा ।
त्वमहस्त्वं तथारात्रिस्त्वामाहुर्वत्सरं बुधाः ॥ १७८.१४६॥

त्वं कालस्त्वं कला काष्ठा त्वं मुहूर्तः क्षणालवाः ।
त्वं बालस्त्वं तथा वृद्धस्त्वं पुमान्स्त्री नपुंसकः ॥ १७८.१४७॥

pAThabehda

त्वं विश्वयोनिस्त्वं चक्षुस्त्वं स्थाणूस्त्वं शुचिश्रवाः ।
त्वं शाश्वतस्त्वमजितस्त्वमुपेन्द्रस्त्वमुत्तमः ॥ ६९.१४९॥

त्वं सर्वविश्वसुखदस्त्वं वेदाङ्गं त्वमव्ययः ।
त्वं वेदवेदस्त्वं धाता विधाता त्वं समाहितः ॥ १७८.१४८॥ ६९.१५०

त्वं जलनिधिरामूलं त्वं धाता त्वं पुनर्वसुः । var  अगद्योनिर्मूलस्त्वं
त्वं वैद्यस्त्वं धृतात्मा च त्वमतीन्द्रियगोचरः ॥ १७८.१४९॥

त्वमग्रणीर्ग्रामणीस्त्वं त्वं सुपर्णस्त्वमादिमान् ।
त्वं संग्रहस्त्वं सुमहत्त्वं धृतात्मा त्वमच्युतः ॥ १७८.१५०॥

त्वं यमस्त्वं च नियमस्त्वं प्रांशुस्त्वं चतुर्भुजः ।
त्वमेवान्नान्तरात्मा त्वं परमात्मा त्वमुच्यसे ॥ १७८.१५१॥

त्वं गुरुस्त्वं गुरुतमोस्त्वं वामस्त्वं प्रदक्षिणः ।
त्वं पिप्पलस्त्वमगमस्त्वं व्यक्तस्त्वं प्रजापतिः ॥ १७८.१५२॥

हिरण्यनाभस्त्वं देवस्त्वं शशी त्वं प्रजापतिः ।
अनिर्देश्यवपुस्त्वं वै त्वं यमस्त्वं सुरारिहा ॥ १७८.१५३॥

त्वं च संकर्षणो देवस्त्वं शशी त्वं प्रजापतिः ।
त्वं वासुदेवोऽमेयात्मा त्वमेव गुणवर्जितः ॥ १७८.१५४॥

त्वं ज्येष्ठस्त्वं वरिष्ठस्त्वं त्वं सहिष्णुश्च माधवः ।
सहस्रशीर्षा त्वं देवस्त्वमव्यक्तः सहस्रदृक् ॥ १७८.१५५॥

सहस्रपादस्त्वं देवस्त्वं विराट्त्वं सुरप्रभुः ।
त्वमेव तिष्ठसे भूयो देवदेव दशाङ्गुलः ॥ १७८.१५६॥

यद्भूतं तत्त्वमेवोक्तः पुरुषः शक्त उत्तमः ।
यद्भव्यं तत्त्वमीशानस्त्वमृतस्त्वं तथाऽमृतः ॥ १७८.१५७॥

त्वत्तो रोहत्ययं लोको महीयांस्त्वमनुत्तमः ।
त्वं ज्यायान्पुरुषस्त्वं च त्वं देव दशधा स्थितः ॥ १७८.१५८॥

विश्वभूतश्चतुर्भागो नवभागोऽमृतो दिवि ।
नवभागोऽन्तरिक्षस्थः पौरुषेयः सनातनः ॥ १७८.१५९॥

भागद्वयं य भूसंस्थं चतुर्भागोऽप्यभूदिह ।
त्वत्तो यज्ञाः संभवन्ति जगतो वृष्टिकारणम् ॥ १७८.१६०॥

त्वत्तो विराट्समुत्पन्नो जगतो हृदि यः पुमान् ।
सोऽतिरिच्यत भूतेभ्यस्तेजसा यशसा श्रिया ॥ १७८.१६१॥

त्वत्तः सुराणामाहारः पृषदाज्यमजायत ।
ग्राम्यारण्याश्चौषधयस्त्वत्तः पशुमृगादयः ॥ १७८.१६२॥

ध्येयध्यानपरस्त्वं च कृतवानसि चौषधीः ।
त्वं देवदेव सप्तास्य कालाख्यो दीप्तविग्रहः ॥ १७८.१६३॥

जङ्गमाजङ्गमं सर्वं जगदेतच्चराचरम् ।
त्वत्तः सर्वमिदं जातं त्वयि सर्वं प्रतिष्ठितम् ॥ १७८.१६४॥

अनिरुद्धस्त्वं माधवस्त्वं प्रद्युम्नः सुरारिहा ।
देव सर्वसुरश्रेष्ठ सर्वलोकपरायण ॥ १७८.१६५॥

त्राहि मामरविन्दाक्ष नारायण नमोऽस्तु ते ।
नमस्ते भगवन्विष्णो नमस्ते पुरुषोत्तम ॥ १७८.१६६॥

नमस्ते सर्वलोकेश नमस्ते कमलालय ।
गुणालय नमस्तेऽस्तु नमस्तेऽस्तु गुणाकर ॥ १७८.१६७॥

वासुदेव नमस्तेऽस्तु नमस्तेऽस्तु सुरोत्तम ।
जनार्दन नमस्तेऽस्तु नमस्तेऽस्तु सनातन ॥ १७८.१६८॥

नमस्ते योगिनां गम्य योगावास नमोऽस्तु ते ।
गोपते श्रीपते विष्णो नमस्तेऽस्तु मरुत्पते ॥ १७८.१६९॥

जगत्पते जगत्सूते नमस्ते ज्ञानिनां पते ।
दिवस्पते नमस्तेऽस्तु नमस्तेऽस्तु महीपते ॥ १७८.१७०॥

नमस्ते मधुहन्त्रे च नमस्ते पुष्करेक्षण ।
कैटभघ्न नमस्तेऽस्तु सुब्रह्मण्य नमोऽस्तु ते ॥ १७८.१७१॥

नमोऽस्तु ते महामीन श्रुतिपृष्ठधराच्युत ।
समुद्रसलिलक्षोभ पद्मजाह्लादकारिणे ॥ १७८.१७२॥

अश्वशीर्ष महाघोण महापुरुषविग्रह ।
मधुकैटभहन्त्रे च नमस्ते तुरगानन ॥ १७८.१७३॥

महाकमठभोगाय पृथिव्युद्धरणाय च ।
विधृताद्रिस्वरूपाय महाकूर्माय ते नमः ॥ १७८.१७४॥

नमो महावराहाय पृथिव्युद्धारकारिणे ।

नमश्चाऽऽदिवराहाय विश्वरूपाय वेधसे ॥ १७८.१७५॥

नमोऽनन्ताय सूक्ष्माय मुख्याय च वराय च ।
परमाणुस्वरूपाय योगिगम्याय ते नमः ॥ १७८.१७६॥

तस्मै नमः परम कारणकारणाय
योगीन्द्रवृत्तनिलयाय सुदुर्विदाय ।
क्षीरार्णवाश्रितमहाहिसुतल्पगाय
तुभ्यं नमः कनकरत्नसुकुण्डलाय ॥ १७८.१७७ ॥

इति ।

ब्रह्मपुराण अध्याय १७८, १२९-१७७, अध्याय श्लोक सङ्ख्या १९४

॥ विष्णुस्तुतिः ॥
गर्गसंहिताततः

कक्षीवानुवाच -
वासुदेव नमस्तेऽस्तु गोविन्द पुरुषोत्तम ।
दीनवत्सल दीनेश द्वारकेश परेश्वर ॥ १॥

ध्रुवे ध्रुवपदं दात्रे प्रह्लादस्यार्तिहारिणे ।
गजस्योद्धारिणे तुभ्यं बलेर्बलिविदे नमः ॥ २॥

द्रौपदीचीरसन्तानकारिणे हरये नमः ।
गराग्निवनवासेभ्यः पाण्डवानां सहायिने ॥ ३॥

यादवत्राणकर्त्रे च शक्रादाभीररक्षिणे ।
गुरुमातृद्विजानां च पुत्रदात्रे नमो नमः ॥ ४॥

जरासन्धनिरोधार्तनृपाणां मोक्षकारिणे ।
नृगस्योद्धारिणे साक्षात्सुदाम्नो दैन्यहारिणे ॥ ५॥

वासुदेवाय कृष्णाय नमः सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय चतुर्व्यूहाय ते नमः ॥ ६॥

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥ ७॥

इति गर्गसंहितायां द्वारकाखण्डे द्वादशाध्यायान्तर्गता
त्रितमुनिशिष्येन कक्षीवता कृता विष्णुस्तुतिः  समाप्ता ॥

॥ श्रीविष्णुस्तुती ब्रह्मोक्त नरसिंहपुराने ॥

ब्रह्मोवाच
नमः क्षीराब्धिवासाय नागपर्यङ्कशायिने ।
नमः श्रीकरसंस्पृष्टदिव्यपादाय विष्णवे ॥ १५॥

नमस्ते योगनिद्राय योगान्तर्भाविताय च ।
ताक्ष्यासनाय देवाय गोविन्दाय नमो नमः ॥ १६॥

नमः क्षीराब्धिकल्लोलस्पृष्टमात्राय शार्ङ्गिणे ।
नमोऽरविन्दपादाय पद्मनाभाय विष्णवे ॥ १७॥

भक्तार्चितसुपादाय नमो योगप्रियाय वै ।
शुभाङ्गाय सुनेत्राय माधवाय नमो नमः ॥ १८॥

सुकेशाय सुनेत्राय सुललाटाय चक्रिणे ।
सुवक्त्राय सुकर्णाय श्रीधराय नमो नमः ॥ १९॥

सुवक्षसे सुनाभाय पद्मनाभाय वै नमः ।
सुभ्रुवे चारुदेहाय चारुदन्ताय शार्ङ्गिणे ॥ २०॥

चारुजङ्घाय दिव्याय केशवाय नमो नमः ।
सुनखाय सुशान्ताय सुविद्याय गदाभृते ॥ २१॥

धर्मप्रियाय देवाय वामनाय नमो नमः ।
असुरघ्नाय चोग्राय रक्षोघ्नाय नमो नमः ॥ २२॥

देवानामार्तिनाशाय भीमकर्मकृते नमः ।
नमस्ते लोकनाथाय रावणान्तकृते नमः ॥ २३॥

इति ।

अध्याय ४७ श्लोक १५-२३, अध्याय श्लोक संख्या १५९

॥ श्रीविष्णुस्तवनं मार्कण्डेयप्रोक्तं नरसिंहपुराणे ॥

मार्कण्डेय उवाच --
नरं नृसिंहं नरनाथमच्युतं प्रलम्बबाहुं कमलायतेक्षणम् ।
क्षितीश्वरैरर्चितपादपङ्कजं नमामि विष्णुं पुरुषं पुरातनम् ॥ १॥

जगत्पतिं क्षीरसमुद्रमन्दिरं तं शार्ङ्गपाणिं मुनिवृन्दवन्दितम् ।
श्रियः पतिं श्रीधरमीशमीश्वरं नमामि गोविन्दमनन्तवर्चसम् ॥ २॥

अजं वरेण्यं जनदुःखनाशनं गुरुं पुराणं पुरुषोत्तमं प्रभुम् ।
सहस्रसूर्यद्युतिमन्तमच्युतं नमामि भक्त्या हरिमाद्यमाधवम् ॥ ३॥

पुरस्कृतं पुण्यवतां परां गतिं क्षितीश्वरं लोकपतिं प्रजापतिम् ।
परं पराणामपि कारणं हरिं नमामि लोकत्रयकर्मसाक्षिणम् ॥ ४॥

भोगे त्वनन्तस्य पयोदधौ सुरः पुरा हि शेते भगवाननादिकृत् ।
क्षीरोदवीचीकणिकाम्बुनोक्षितं तं श्रीनिवासं प्रणतोऽस्मि केशवम् ॥ ५॥

यो नारसिंहं वपुरास्थितो महान् सुरो मुरारिर्मधुकैटभान्तकृत् ।
समस्तलोकार्तिहरं हिरण्यकं नमामि विष्णुं सततं नमामि तम् ॥ ६॥

अनन्तमव्यक्तमतीन्द्रियं विभुं स्वे स्वे हि रूपे स्वयमेव संस्थितम् ।
योगेश्वरैरेव सदा नमस्कृतं नमामि भक्त्या सततं जनार्दनम् ॥ ७॥

आनन्दमेकं विरजं विदात्मकं वृन्दालयं योगिभिरेव पूजितम् ।
अणोरणीयांसमवृद्धिमक्षयं नमामि भक्तप्रियमीश्वरं हरिम् ॥ ८॥

इति ।

अध्याय १० श्लोक ८-१५, अध्याय श्लोक संख्या ५२
श्रीनरसिंहपुराणे मार्कण्डेयचरित्रे दशमोऽध्यायः ॥ १०॥